यमप्सु नृमणा अजस्रमिंधान एनं जरते स्वाधीः
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृ
तं पुरुत्रा॥ विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं
यत आजगंथा॥ समुद्रे त्वा नृमणा अप्स्वंतर्नृचक्षा
ईधे दिवो अग्न ऊधन्॥ तृतीये त्वा रजसि तस्थिवां
समृतस्य योनौ महिषा अहिन्वन्॥ अक्रंददग्नि
स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समंजन्॥ स
द्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भा
त्यंतः॥ उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृ
तो नि धायि॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

द्यावापृथिवी उरुचक्रेण शोचिषा ऋष्यामिनक्ष
ते॥ विश्वस्यकेतुर्भुवनस्यगर्भ आरोदसी अपृणाज्जा
यमानः॥ वीडुंचिदद्रिमभिनत्परायंजनायदग्निमय
जं[illegible]पंचा॥ श्रीणामुदारो धरुणोरयीणां मनीषाणां
प्रार्पणः सोमगोपाः॥ [illegible]सूनुःसहसो अप्सुराजावि
भात्यग्रउषसामिधानः॥ यस्तेअद्यकृणवद्भद्रशो
चेपूपंदेवघृतवंतमग्ने॥ [illegible]तंनयप्रतरांवस्योअच्छा
भिसुम्नंदेवभक्तंयविष्ठ॥ आतंभजसौश्रवसेष्व
ग्नउक्थउक्थ आभजशस्यमाने॥ प्रियःसूर्येप्रियो
अग्नाभवात्युज्जातेनभिनदद्उज्जनित्वैः॥ त्वामग्नेयज

२

मानाअनुद्यून्विश्वावसूनिदधिरेवार्याणि॥ त्वयास
हद्रविणमिच्छमानाव्रजंगोमंतमुशिजोविवव्रुः॥ दृशा
नोरुक्मउर्व्याव्यद्यौदुर्मर्षमायुःश्रियेरुचानः॥ अग्नि
रमृतोअभवद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः॥ अस्मि
न्नहमितियजुषापितुर्दक्षिणंकर्णंकुमारमुपवेश्य॥ अ
स्मिन्नहंसहस्रंपुष्यास्म्येधमानाःस्वेवशे॥ अंगादंगा
दितिद्वाभ्यामभिमंत्रयते॥ अंगादंगात्संभवसिहृदया
दधिजायसे॥ आत्मावैपुत्रनामासिसजीवशरदःशतं
अश्माभवपरशुर्भवहिरण्यमस्तृतंभव॥ पशूनांत्वा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हिंकारेणाभिजिघ्राम्यमुकशर्मन्नः ताभ्यामेवमूर्धन्यवघ्राय
एतयोरेवन्यचदक्षिणेकर्णेजपति॥नक्षत्रनामाचनिर्दिशति
यथारोहिणीस्यादित्तत्रश्लोकः॥रोरेममयेच्चिषुवर्द्धिराद्दौ
ष्ठांसेचनांसप्तमनत्राभ्यपुक्षु॥र्षोषेषुताम्नाःकृपरोस्वरो
स्यस्यांप्तारदीर्घःसविसर्गरूषः॥एषानक्षत्रनाम्नाप्रथ
मजानिर्दिष्टाः॥दर्भेणसोवर्ण्यनिष्कंर्यंगत्रंधिंवध्यातेन
घृतसंयुक्तंमधुमेधांइतिप्राजोदध्यादित्यंतेनसकलकु
मारंप्राशयेत्॥मेधांतेदेवःसवितामेधांदेवीसरस्वती
मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजा॥त्वयिमेधां
त्वयिप्रजांत्वय्यग्निस्तेजोदधातुत्वयिमेधांत्वयिप्रजां
त्वयीन्द्रइन्द्रियंदधातु॥त्वयिमेधांत्वयिप्रजांत्वयिसूर्यो

भ्राजोदधातु॥क्षत्रियैत्वेतिपंचभिर्मंत्रैरक्षिसंस्ना
पयित्वा॥क्षत्रियैत्वानिर्ऋत्यैत्वाद्रुहोमुंचामिवरुणस्यपा
शात्॥अनागसंब्रह्मणेत्वाकरोमिशिवेतेद्यावापृथवीउभे
इमे॥शंतेअग्निःसहाद्भिरस्तुशंद्यावापृथिवीसहौषधी
भिः॥शमंतरिक्षंसहवातेनतेशंतेचतस्रःप्रदिशोभ
वंतु॥यादैवीश्चतस्रःप्रदिशोवातपत्नीरभिसूर्योविच
ष्टे॥तासांत्वाजरसआदधामिप्रयक्ष्मएतुनिर्ऋतिंपरा
चैः॥अमोचियक्ष्माद्दुरितादवर्त्यैद्रुहःपाशान्निर्ऋत्यैचोद
मोचि॥अहाअवर्त्तिमविदत्स्योनमप्यभूद्भद्रेसुकृतस्य
लोके॥सूर्यमृतंतमसोग्राह्याद्यद्देवाअमुंचन्नसृजन्व्येन
सः॥एवमहमिमंक्षेत्रियाज्जामिशंसाद्द्रुहोमुंचामिवरु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णस्यप्राशनात् ॥ व्याहृतिभिरोंकारचतुर्थाभिः पृषदाज्यंकां
स्येनकुमारंसंप्राशयित्वा ॥ भूःस्वाहा भुवःस्वाहा सुवःस्वा
हों स्वाहा ॥ अग्निशेषं सर्वं सज्यगोष्ठे निनयेत् ॥ मातेकुमा
रमितिमातुरंक आदाय ॥ मातेकुमारं रक्षोवधीन्माधेनु
रत्याचारिणी ॥ प्रियाधनस्यभूयाएधमानास्वेगृहे ॥ अ
यंकुमार इति मातुर्दक्षिणंस्तनं प्राशयित्वा ॥ अयंकुमारो
जरांधयतु दीर्घमायुः ॥ यस्मैत्वंस्तनंप्रप्यायायुर्वर्चोय
शोबलं ॥ यद्भूमेरितिद्वाभ्यांपृथिवीमुपस्थ ॥ यद्भूमेर्हृद
यंदिविचंद्रमसिश्रितं ॥ तदुर्विपश्यंमाहंपौत्रमघंरुदं
यत्तेसुसीमेहृदयंवेदाहंतत्प्रजापतौ ॥ वेदामतस्यतेवयं
माहंपौत्रमघंरुदं ॥ नामयतीतियजुषात्तत्रसन्निविष्टं

कुमारमभिमृश्य ॥ नामयतिनरुदंतियत्रवयंवदामसिय
त्रचाभिमृशामसि ॥ आपःसुप्तेष्विति कुमारःशिरःसमी
पेउदकुंभंनिधाय ॥ आपःसुप्तेषुजाग्रत रक्षांसिनिरि
तोनुदध्वं ॥ सर्षपान्फलीकरणमिश्रानंजलिनादाय
अयंकलिमिति स्वाहांतैः तच्छेषं हुत्वा ॥ पुनःस्वाहाकार
पूर्ववह्निंजुहुयादेवं शंडेरथ इति प्रतिमंत्रमश्रावाहुतिंहु
त्वा ॥ आचम्यप्राणानायम्य ॥ तिथ्यादिसंकीर्त्य ॥ अस्य
शिशोः आयुष्याभिवृध्यर्थं अनयोः सूतिकाबालकयोः
श्वाजालादिपिशाचेभ्योरक्षणार्थं फलीकरणहोमंकरि
ष्ये ॥ तदंगंस्थंडिलोल्लेखनादि सकलंकर्मकरिष्ये ॥ तत्रा
ग्निंप्रतिष्ठाप्य ॥ अग्निमलंकृत्य ॥ अंजनासकृदादायति

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ष्टन् जुहुयात् ॥ अयं कलिं पतयन्तं श्वानमिवोद्वृद्धम् ॥ अ
जां वाशितामिव मरुतः पर्याध्वं स्वाहा ॥ मरु० ॥ शं ड ए ह म म
स्वाहा ॥ मरु० ॥ स्वाहा ॥ मरु० ॥ इति स्थागः ॥ एवं सर्वत्र ॥ शं
डे रथः शंडिकेर उलूखलः ॥ च्यवनो नश्यतादितः स्वा
हा ॥ मरु० ॥ आ ॥ अयः शंडो मर्क उपवीर उलूखलाः ॥ च्य
वनो स्वाहा ॥ मरु० ॥ २ ॥ केशिनीः श्वलोमिनीः खजापोजो
पकाशिनी ॥ अपेत नश्यतादितः स्वाहा ॥ मरु० ॥ ३ ॥ मि
त्रवाससः कौबेरकाः रक्षोराजेन प्रेषिताः ॥ ग्रामं सजा
नयो गच्छंती छंतो परिदाकृतान्त्स्वाहा ॥ मरु० ॥ आ ॥ एता
न्हतेतान्गृह्णीतेत्ययं ब्रह्मणस्पुत्रः ॥ तानग्निः पर्यस
रत्तानिंद्रस्तान्बृहस्पतिः ॥ तानहं वेद ब्राह्मणः प्रमृशतः

कूटदंतान्विकेशाल्लंबनस्तनान्स्वाहा ॥ मरु० ॥ आ ॥ नक्तंचा
रिण उरस्पेशाच्छूलहस्तान्कपालपान् ॥ पूर्व एषां
पितेत्युच्चैश्राव्यकर्णकः ॥ माता जघन्या सर्पति ग्रामे वि
धुरमिच्छंती स्वाहा ॥ मरु० ॥ निशीथचारिणी स्वसा
संधिना प्रेक्षते कुलं ॥ या स्वपंतं बोधयति यस्यै विजाता
यां मनः ॥ तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् ॥ अ
अ
ग्ने अक्षीणि निर्दह स्वाहा ॥ मरु० ॥ आ ॥ अग्नये इदं ॥ बा ॥ ८ ॥
इत्येवं आहुतीर्हुत्वा ॥ गृहपालोस्वं श्रास्ति प्रविष्टे प्रवि
ष्ट एनं तूष्णीं मन्नावपति तिते पितृ यात्कुर्युरेव मर्दस्त
यं कलिमिति निर्दिश्य तायां दध्यात् ॥ एवं दश रात्रिपर्यं
तमग्निं सुरक्षितं स्थापयेत् ॥ इति जातकर्म ॥ ॥ ससस्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जातकर्माख्यस्य कर्मणः सांगतायै तत्संपूर्णफलावाप्त्यर्थं
नानानामगोत्रेभ्यो ब्राह्मणेभ्यः यथाकालं यथोपपन्नेनान्नेन
भोजइष्ये ॥ तत्स्य० ॥ यर्थं भूयसीं दक्षिणां दातुमहमु
त्सृज्ये ॥ अनेन जातकर्माख्येन कर्मणा भगवान् परमेश्व
रः प्रीयतां ॥ इति जातकर्म समाप्तं ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ
अथ नामकर्म लिख्यते ॥ छ ॥ आचम्य प्राणानायम्य ॥ सुमुख
श्चेत्यादि तिथौ अस्य शिशोः आयुष्याभिवृद्ध्यर्थं सकलसत्पुरुष
मध्ये नामप्रकट सिद्ध्यर्थं मासनाम्ना नक्षत्रनाम्ना व्यवहारनाम्ना
संस्करिष्ये ॥ निर्विघ्नार्थं गणपतिपूजनं पुण्याहवाचनं मात
कापूजनं नांदीश्राद्धं च करिष्ये ॥ इति संकल्प्य ॥ ततः विशालस्य
कांस्यपात्रे तंदुलान् पूरइत्वा ॥ तदुपरि गणपति कुलदेवता

नक्षत्रनाम्ना मासनाम्ना व्यवहारनाम्ना स्वर्णशलाकया लि
खित्वा ॥ तत्र श्लोकः ॥ कृष्णोऽनंतोऽच्युतश्चक्री वैकुंठोथ जना
र्दनः ॥ उपेंद्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥ १ ॥ योगीशः
पुंडरीकाक्षो मासनामान्यनुक्रमात् ॥ कन्यानामानि ॥ श्री
पद्मा कमला लक्ष्मी सीता सत्या च रुक्मिणी ॥ माधवी चं
द्रिका देवी तुलसी जांबवी तथा ॥ एतानि द्वादशनामानि मा
र्गशीर्षान्यनुक्रमात् ॥ एवं क्रमेण लिखित्वा ॥ नामत्रयदेवता
भ्यो नमः ॥ आवाहनादि षोडशोपचारैः संपूज्य ॥ अनया
पूजया नामत्रयदेवताः प्रीयंतां ॥ अस्य शिशोः दक्षिणे कर्णे
नामत्रयाणि कथयित्वा ॥ व्यंकटेश भक्तो सि त्वं शतायुर्भव ॥
नक्षत्रनाम्ना मुकोयं लंशातो० ॥ मासनाम्ना मुकोयं लंशातो०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्यवहारनाम्ना यज्ञेश्वरनामासीत्वं शर्मा॰ ॥ अंगादंगादिति द्वाभ्यां
शिरःश्रुमभिमंत्रयते अंगादंगात्संभवसि हृदयादधिजायसे
वेदो वै पुत्रनामासि स जीव शरदः शतं ॥ अश्माभव परशुर्भ
व हिरण्यमस्तृतं भव ॥ पशूनां त्वा हिंकारेणाभिजिघ्राम्यसौ
एताभ्यां मंत्राभ्यां शिरसो मूर्धन्यवघ्राय ॥ दक्षिणे कर्णे अ
ग्निरायुष्मानिति पंचमंत्रांजपेत् ॥ अग्निरायुष्मान्स वनस्प
तिभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि ॥ सोम आयुष्मां
स ओषधीभिरायुष्मांस्तेन त्वायुषा॰ ॥ यज्ञ आयुष्मान्स दक्षि
णाभिरायुष्मांस्तेन॰ ॥ ब्रह्म आयुष्मंत ब्राह्मणैरायुष्मांस्तेन
त्वायुषा॰ ॥ देव आयुष्मंतस्तेमृतेनायुष्मंतस्तेन॰ ॥ कुमा
रिहं सर्वस्मादात्मनः संभूतासि सा जीव शरदः शतं ॥

इति नामकर्म समाप्तं ॥ कृतस्य नामकर्माख्यस्य कर्मणः
सांगतासिध्यर्थं तत्संपूर्णफलावाप्त्यर्थं नाना नामगोत्रेभ्यो
ब्राह्मणेभ्यः यथासंभवं यथाकालं यथोपपन्नेनान्नेन
भोजयिष्ये ॥ कृतस्य नामकर्माख्यस्य कर्मणः सांगतायै॰
यथासंभवं भूयसीं दक्षिणां दातुमहमुत्सृज्ये ॥ अनेन
नामकर्माख्येन कर्मणा भगवान्परमेश्वरः प्रीयतां ॥
॥ छ ॥ श्रीगणेशाय नमः ॥ अन्नप्राशनकर्म लिख्यते ॥
जन्मनोधि षष्ठे मासे अन्नप्राशनं कुर्यात् ॥ पत्नीकुमारो
दक्षिणत उपवेश्य स्वयमुत्तरत आसीनः ॥ आचम्य प्राणाना
यम्य ॥ सुमुखश्चेत्यादि निधौ ॥ अस्य शिशोः आयुष्याभि
वृद्ध्यर्थं इमं कुमारं अन्नप्राशनेन कर्मणा संस्करिष्ये ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निर्विघ्नतार्थं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्रा
द्धं च करिष्ये ॥ इति संकल्प्य ॥ अन्नप्राशनांगत्वेन सूर्यो मा चेम
नो दिक्पालः सिध्यर्थं कुमारस्य नवतंतु धारणं करिष्ये ॥ नवो नवो
८ भवति जायमानो न्हां केतुरुषसामेत्यग्रे ॥ भागं देवेभ्यो विद
धात्यायं प्रचंद्रमास्तिरति दीर्घमायुः ॥ आचम्य ॥ दधिमधु
घृतमोदनानि संसृज्य कांस्येन भूरपामि तिच तस्त्रिभिः म
न्त्रैः कुमारं प्राशयेत् ॥ भूरपांत्वौषधीनां रसं प्राशयामि शि
वास्त आप ओषधयः संतु नमीवास्त आप ओषधयः संतु
अमुकशर्मन् ॥ भुवोपां त्वौषधीनां रसं प्राशयामि शिवा
स्त आप ओषधयः संतु नमीवास्त आप ओषधयः संतु ॥ ६
अमुकशर्मन् ॥ सुवरपां त्वौषधीनां रसं प्राशयामि शिवा

स्त आप ओषधयः संतु नमीवास्त आप ओषधयः संतु ॥ अ
मुकशर्मन् ॥ भूर्भुवः सुवरपां त्वौषधीनां रसं प्राशयामि शि
वास्त आप ओषधयः संतु नमीवास्त आप ओषधयः संतु ॥
अमुकशर्मन् ॥ इत्यन्नप्राशनकर्म समाप्तं ॥ कृतस्य अन्नप्रा
शनाख्यस्य कर्मणः सांगतायै तत्संपूर्णफलावाप्त्यर्थं नानाना
मगोत्रेभ्यो ब्राह्मणेभ्यः यथासंभवं यथाकालं यथोपपन्नेना
न्नेन भोजयिष्ये ॥ द्वितं० ॥ यथासंभवं भूयसीं दक्षिणां दातुम
हमुत्सृज्ये ॥ अनेन अन्नप्राशनाख्येन कर्मणा भगवान् प
रमेश्वरः प्रीयतां ॥ आशिषो वाचयित्वा ॥ छ ॥ छ ॥ छ ॥ छ ॥
श्रीगणेशाय नमः ॥ छ ॥ जन्मनोधि तृतीये वर्षे चौलं उपनय
नेन सह वा कुर्यात् ॥ पत्नी कुमारो दक्षिणत उपवेश्य स्वयमुत्तरत

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आसीनः॥ आचम्य प्राणानायम्य॥ शुभपुण्ये स्वादितिथौ मम कु
मारस्य चौलकर्मणा संस्करिष्ये॥ निर्विघ्नार्थं गणपतिपूजनं पु
ण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये॥ इति संकल्प
चूडाकर्मांगत्वेन कुमारस्य रक्षार्थं रक्षाबंधनं करिष्ये॥ यवकु
शजलतूयशलालुग्लस्य दर्भपुंजीलान् शाद्वलत्यसी नृपा
णामुत्तरतो निधाय॥ सीमंतवत्॥ धाता ददातु नो रयि
मिति च तस्रो यस्त्वा हृदा कीरिणेति च तस्रः प्रतिमंत्रमष्टावा
ज्याहुतीर्हुत्वा॥ आचम्य प्राणानायम्य॥ अद्येत्यादितिथौ अ
स्य कुमारस्य आयुष्याभिवृद्ध्यर्थं चूडाकर्महोमं करिष्ये॥
तदंगं स्थंडिलोल्लेखनाद्यग्निध्यानान्ताज्यभागांते॥ स्रुवे
ण चतुर्गृहीतमाज्यं स्रुचि संपूर्य॥ होमं कुर्यात्॥ धाता द

दातु नो रयिमीशानो जगतस्पतिः॥ स नः पूर्णेन वावनत् स्वा
हा॥ धात्र इदं न मम॥१॥ धाता प्रजाया उत राय ईशे धातेदं
विश्वं भुवनं जजान॥ धाता पुत्रं यजमानाय दाता तस्मा उ
हव्यं घृतवद्विधेम स्वाहा॥ धात्र इदं०॥ धाता ददातु नो रयिं प्रा
चीं जीवातुमक्षितां॥ वयं देवस्य धीमहि सुमतिं सत्यरा
धसः स्वाहा॥ धात्र इदं॥३॥ धाता ददातु दाशुषे वसूनि प्रजा
कामाय मीढुषे दुरोणे॥ तस्मै देवा अमृताः संव्ययंतां विश्वेदे
वासो अदितिः सजोषाः स्वाहा॥ धात्र इदं०॥४॥ यस्त्वा हृदा कीरि
णा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि॥ जातवेदो यशो अस्मासु
धेहि प्रजाभिरग्ने अमृतत्वमश्यां स्वाहा॥ अग्नये जा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१०

नवेदसइदंननमम ॥१॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृण
वःस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्व
स्तिस्वाहा ॥ अग्नयेजातवे० ॥ त्वेसुपुत्रशवसोवृत्रन्कामकातयः
नत्वामिंद्रातिरिच्यतेस्वाहा ॥ इंद्रायेदं ॥ उक्थउक्थेसोमइंद्रम
मादनीथेनीथेमघवानंसुतासः ॥ यदींसबाधःपितरंन
पुत्राःसमानदक्षाअवसेहवंतेस्वाहा ॥ इंद्रायेदंमघवतइदं ॥
इत्यष्टावाज्याहुतीर्हुत्वा ॥ समिल्लंबनहंनं ॥ जयादिप्रंस्लनिस
र्जनांतंकृत्वा ॥ उत्तरेणाग्निंप्राचींकुमारमुपवेश्य ॥ ब्रेण्या
शल्लल्यात्रिभिर्दर्भपुंजीलैःशलालुग्लप्सैर्वेतितूष्णींके
शान्विनीययथऋषिशिखानिदध्यातियथावैषांकुलधर्म
स्यादपांसंसर्जनाद्याकेशानिधानांतंसमानं ॥ उष्णे

१०

नवायवुदकेनेत्युष्णोदकंशीतोदकेनीनीय ॥ उष्णेनवायवुद
केनेहिदितिःकेशान्वपतु ॥ आपउंदंत्वितितेनोदकेनकुमार
स्यशिरउनत्ति ॥ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ जो
कृसूर्यंदृशे ॥ त्रीन्दर्भानपूर्वापान्पूर्वेअंतर्धाय ॥ ये
नावपदितिचतसृभिःप्रतिमंत्रंप्रतिदिशंप्रदक्षिणंप्रवपति
येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेन
ब्रह्माणोवपतेदमस्यायुष्मांजरदष्टिर्यथासत् ॥ अमुकशर्मन्
इतिशिरःपुरस्तात्क्षुरेणप्रवपेत् ॥ अपउपस्पृश्य ॥ कुमारस्य
माताब्रह्मचारीवायवसंतितअनडुहशकृत्पिंडंगृहीत्वा ॥
दक्षिणतःस्थित्वा ॥ यत्क्षुरेणेतिपर्यायमवपंतमाचार्यंमातानुमं
त्रयते ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् ॥ शुंधि शिरो
मास्यायुः प्रमोषीः ॥ आचार्यस्तान्केशान् शाकलिपिंडे निधाय ॥
अपउपस्पृश्य ॥ ततः स्त्रीं दर्भां दक्षिणतोंतर्धाय ॥ येन पूषा
बृहस्पतेरग्नेरिंद्रस्य चायुषेऽवपत् ॥ तेनास्यायुषे वप सौश्लो
क्याय स्वस्तये ॥ इति दक्षिणतः केशान्वापयित्वा ॥ तान्केशान्
शाकलिपिंडे निधाय ॥ अपउपस्पृश्य ॥ पुनस्त्रीं दर्भान्पश्चि
मतोंतर्धाय ॥ येन भूयश्च रात्र्यां ज्योक्च पश्याति सूर्यं ॥ ते
नास्यायुषे वप सौश्लोक्याय स्वस्तये ॥ इति पश्चात्केशान्वा
पयित्वा ॥ तान्केशान् शाकलिपिंडे निधाय ॥ अपउपस्पृश्य
पुनः स्त्रीं दर्भानुत्तरतोंतर्धाय ॥ येन पूषा बृहस्पतेरग्नेरिंद्र
स्य चायुषेऽवपत् ॥ तेन ते वपामि महेंद्रो भिन्तायुषा वर्चसा

यथा ज्योक्सुमना असाः ॥ इत्युत्तरकेशान्वापयित्वा ॥ तान्केशा
न् शाकलिपिंडे निधाय ॥ अपउपस्पृश्य ॥ ततो माता ब्रह्मचारी
वाल्याय केशान्तिलकेश सहितं शाकलिपिंडे औदुंबरमूले दर्भस्तं
बे वा निदधाति ॥ उप्त्वाय केशान्वरुण स्वराजो बृहस्पतिः सवि
ता सोमो अग्निः ॥ तेभ्यो निधानं बहुधान्वविंदन्नंतरा द्यावा
पृथिवी अपः सुवः ॥ सम्यक्स्नापयित्वा ॥ क्षुरं प्रक्षाल्य ॥ तेन
न्यत्कर्म निवृत्तिः ॥ ततः एवं गोदानं षोडशे वर्षे ग्लस्य दर्भ
पुञ्जीलैः स्नातः त्रिशिखा निधान वर्जं ॥ यथाप्रवरं केशान्रक्षा
प्य कुलधर्मेण वा ॥ ततो ब्रह्मणेवरं दद्यात् ॥ वत्साहेन धेनुः ॥
इति चौलकर्म समाप्तं ॥ अथ उपनयनं उच्यते ॥ छ ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१२

उपनयनादौ संकल्प्य॥ आचम्य प्राणानायम्य॥ पूर्वैर्धुराचा
र्यैः ममोपनेतृत्व योग्यतासिध्यर्थं कृच्छ्रत्रयं तत्प्रत्याम्नाय
गोनिष्क्रयीभूतं यथाशक्ति रजित द्रव्यदानेनाहमाच
रिष्ये॥ तथा द्वादशाब्दाधिकत्वे॥ ततो बटु मम कामचार काम
वाद कामभक्षणादि दोषपरिहार द्वारोपनेयत्व योग्यता सि
ध्यर्थं कृच्छ्रत्रय प्रायश्चित्तं तत्प्रत्याम्नाय गोनिष्क्रयीभूतं
यथाशक्ति रजित दान द्वारा आचरिष्ये॥ उत अस्य कुमारस्य पुं
सवन सीमंतोन्नयन जातकर्म नामकर्मान्न प्राशन चौलसं
स्काराणां लोप निमित्त प्रत्यवाय परिहारार्थं प्रति संस्कारं
पाद कृच्छ्रं प्रायश्चित्तं चौलस्यार्ध कृच्छ्रं तत्प्रत्याम्नाय गो

१२

निष्क्रयीभूतं यथाशक्ति रजित द्रव्यदानेनाहमाचरिष्ये॥
इति संकल्प्य॥ तूर्यघोषेण मंगल स्नानं कारयित्वा॥ उपन
यनं वसंते ग्निं प्रतिष्ठाप्य कौपीनाच्छिन्नं कृतशौचं कुमारं
दक्षिणत उपवेश्य स्वयमुत्तरत आसीनः॥ आचम्य प्राणा
नायम्य॥ शुभमुहूर्तेत्यादि तिथौ॥ ४॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection